इति विमृश्य एकान्तभङ्गं कृतवति लक्ष्मणेऽन्तर्हिते च मुनिरूपे काले रामेणापि अभीष्टदानेन सन्तोष्य प्रस्थापिते दुर्वाससि, लक्ष्मणेन स्ववधे प्रतिज्ञापूरणार्थं याचिते रामवृत्तान्तः।

निखिलमुनिवचोभिस्त्याग एवास्य बन्धोः
बध इति स विचार्य्य स्थैर्य्यवान् रामचन्द्रः।
असुचदथ सुमित्रापुत्रमात्माधिकं तं
न हि किमपि गरीयो वाक्यतो ह्युत्तमानाम् ॥ १४२ ॥

तेन त्यक्तः स्वीयदेहोपयोगात् प्रीतो योगाल्लक्ष्मणोऽङ्गं विमुच्य।
सद्यः स्वर्गं पूज्यमानः स लेभे सत्कर्म्मा हि श्रेयसामेव भागी ॥१४३॥

---

कुलं तिष्ठतु, कुलध्वंसो मा भूदिति भावः। अहं पुनः अमुं देहं विमुच्य त्यक्त्वा राज्ञः प्रतिज्ञां पूर्णां सत्यामित्यर्थः, करवै करवाणि इत्यर्थः, यतः परार्थो पररक्षार्थो बधः, आत्मन इति शेषः, श्लाघ्यः प्रशस्यः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। शार्दूलविक्रीडितं वृत्तम् ॥ १४१ ॥

निखिलेति। अथानन्तरं स स्थैर्य्यवान् सुधीरो रामचन्द्रः निखिलानां सर्वेषां मुनीनां वचोभिः वचनैः अस्य बन्धोः भ्रातुः त्याग एव बध इति विचार्य्य आत्माधिकं प्राणाधिकं तं सुमित्रापुत्रम् असुचत्। हि तथाहि उत्तमानां महतां जनानां वाक्यतः वचनात् किमपि गरीयः अतिशयेन गुरु न हि नैव भवतीत्यर्थः। मालिनी वृत्तम् ॥ १४२ ॥

तेनेति। सः लक्ष्मणः तेन रामेण त्यक्तः स्वीयस्य देहस्य उपयोगः प्रयोजनं यस्मिन् तस्मात् योगात् समाधेः, योगमास्थायेत्यर्थः, यवर्थेपञ्चमी, प्रीतः प्रसन्नः, अनाकुलचित्त इत्यर्थः,

एवं दोर्दण्डदर्पं दिशि दिशि परमाश्चर्य्यदं गापयित्वा
कृत्वा दुर्वृत्तशान्त्या त्रिभुवनमखिलं स्वस्वधर्म्मप्रवृत्तम् ।
भुक्त्वा राज्यं सहस्राधिकमयुतमहो वत्सरान् पूर्णकामः
सार्द्धं पौरैः समस्तैरगमदतिकृती राघवः स्वीयलोकम् ॥ १४८ ॥

एष श्रीलहनूमता विरचिते श्रीमन्महानाटके
वीरश्रीयुतरामचन्द्रचरिते प्रत्युद्धृते विक्रमैः ।
मिश्रश्रीमधुसूदनेन कविना सन्दर्भ्य सज्जीकृते
स्वर्गारोहणनामकोऽत्र नवमो यातोऽङ्क एवेत्यसौ ॥ १४९ ॥

समाप्तोऽयं ग्रन्थः ।

---

आनीतानि व्योमयानानि विमानानि अनवरतम् अजस्रम् उपेयुः उपजग्मुः, अहो आश्चर्य्यम् । स्रग्धरा वृत्तम् ॥ १४७ ॥

एवमिति । अतिकृती अतिकुशलः राघवः दिशि दिशि एवम् इत्थं परमाश्चर्य्यदं दोर्दण्डदर्पं भुजबलगौरवं गापयित्वा कीर्त्तयित्वा विख्याप्येत्यर्थः, दुर्वृत्तानां दुराचाराणां दशाननादीनां शान्त्या संहारेण अखिलं समग्रं त्रिभुवनं स्वस्वधर्मे प्रवृत्तं रतं कृत्वा सहस्राधिकमयुतं वत्सरान् एकादशसहस्रवर्षाणि इत्यर्थः, राज्यं भुक्त्वा पूर्णकामः सिद्धमनोरथः समस्तैः पौरैः पुरवासिभिः सार्द्धं स्वीयलोकं विष्णुलोकं, वैकुण्ठमित्यर्थः, अगमत् जगाम । स्रग्धरा वृत्तम् ॥ १४८ ॥

एष इति । स्वर्गारोहणं नाम यस्य सः ॥ १४९ ॥

इति बि, ए, उपाधिधारिणा पण्डितकुलपतिना श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता महानाटकव्याख्या समाप्ता ।